SAPTHAGIRI (SANSKRIT)
ILLUSTRATED MONTHLY
Volume:8, Issue: 8
November-2021, Price Rs.5/-.
No. of pages-24.



तिरुमलतिरुपतिदेवस्थानानि

# सप्तगिरिः

सचित्रमासपत्रिका
नवम्बर् २०२१
रू.५/-

## तिरुमल श्रीस्वामिनः पुष्पयागमहोत्सवः
(११-११-२०२१)



## तिरुचानूरु
# श्री पद्मावतीदेव्याः वार्षिकब्रह्मोत्सवः

२०२१ नवम्बर्
२९ तः डिसेम्बर् ०८ पर्यन्तम्

**२९-११-२०२१ इन्दुवासरः**

प्रातः - लक्षकुङ्कुमार्चनम्

रात्रौ - सेनाधिपति उत्सवः, अङ्कुरार्पणम्

**३०-११-२०१९ भौमवासरः**

प्रातः - तिरुच्चि उत्सवः,ध्वजारोहणम्

रात्रौ - लघुशेषवाहनम्

**०१-१२-२०१९ सौम्यवासरः**

प्रातः - महाशेषवाहनम्

रात्रौ - हंसवाहनम्

**०२-१२-२०२१ बृहस्पतिवासरः**

प्रातः - मौक्तिकमण्डपम्

रात्रौ - सिंहवाहनम्

**०३-१२-२०२१ भृगुवासरः**

प्रातः - कल्पवृक्षवाहनम्

रात्रौ - हनुमद्वाहनम्

**०४-१२-२०२१ मन्दवासरः**

प्रातः - पल्लक्युत्सवः, सायं - वसन्तोत्सवः

रात्रौ - गजवाहनम्

**०५-१२-२०२१ भानुवासरः**

प्रातः - सर्वभूपालवाहनम्

रात्रौ - गरुडवाहनम्

**०६-१२-२०२१ इन्दुवासरः**

प्रातः - सूर्यप्रभवाहनम्

रात्रौ - चन्द्रप्रभवाहनम्

**०७-१२-२०२१ भौमवासरः**

प्रातः - रथोत्सवः

रात्रौ - अश्ववाहनम्

**०८-१२-२०२१ सौम्यवासरः**

प्रातः - पल्लकि तिरुच्चि उत्सवः, अवभृथोत्सवः, चक्रस्नानम्, पञ्चमीतीर्थम्

रात्रौ - तिरुच्चि उत्सवः, ध्वाजावरोहणम्



## गीतामृतम्

अर्जुन उवाच -

गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते।

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः।।

(भगवद्गीता २९/१)

अर्जुनः कृष्णं प्रति ‘‘हे श्रीकृष्ण! पुरतः स्थितान् मम बन्धून् युद्धाय सन्नद्धान् दृष्ट्वा मम धनुः गाण्डीवनामकं हस्तात् च्यवते। मम चर्म शरीरं वा सर्वतः परितप्यते। किञ्च मे मनः अन्तःकरणं चलतीव स्थितमिति कारणादेव अहं रथे अवस्थातुं न शक्नोमि’’ इत्यवोचत्। अर्थात् अत्यन्तधैर्यदायकेन गाण्डीवधनुषा विना दौर्बल्यमाप्नोमि इत्यादिहेतोः मूर्च्छा सम्भवतीति सूचितम्।

## सङ्कीर्तनम्

किं करिष्यामि किं करोमि बहुल
शंकासमाधानजाड्यं वहामि
।।किं करिष्यामि।।

नारायणं जगन्नाथं त्रिलोकैक
पारायणं भक्तपावनं
दूरीकरोम्यहं दुरितदूरेण
संसारसागरमग्नचञ्चलत्वेन
।।किं करिष्यामि।।

तिरुवेङ्कटाचलाधीश्वरं करिराज
वरदं शरणागतवत्सलं
परमपुरुषं कृपाभरणं न भजामि
मरणभवदेहाभिमानं वहामि
।।किं करिष्यामि।।

(अन्नमाचार्यसङ्कीर्तनम्)



# दीपावलिः

भारतीयसंस्कृत्यां निखिलदेशीयाः आबालवृद्धाः आचरन्तीदं पर्वदिनम्। सर्वेषां जीवने प्रकाशमयानि घटनानि कल्पयतीति अस्य दिनस्य ''दीपावलिः'' इति अन्वर्थनाम।

वयं भारतीयाः एनम् उत्सवं आश्वयुजबहुलत्रयोदशीतिथिमारभ्य कार्तिकशुद्धद्वितीयापर्यन्तं आहत्य पञ्चदिनानि कुर्मः। एनं दीपावलिमुद्दिश्य हिन्दूसम्प्रदायमनुसृत्य हैन्दवाः वयम् एकमासं यावत् दीपेन प्रज्वलितप्रणतीः प्रातः सायं च गेहस्य तुलसीवृन्दावनस्य च पुरोभागे स्थापयामः। प्रत्येकं आश्वयुजकृष्णत्रयोदश्यां प्रज्वाल्यमानदीपं ''यमदीपः, आकाशदीपः'' इति व्यवहरामः। तस्मिन् दिने दीपज्वालनेन पितृदेवतानां मुक्तिमार्गः सुलभप्रदो भवति इति पुराणानि कथयन्ति। दिनमेतत् ''जलपूर्णत्रयोदशी'' इति व्यवह्रियते। यतः तद्दिने गेहं शुद्धीकृत्य रङ्गवल्यादिभिरलङ्कृत्य कलशे जलमापूर्य सर्वाः नदीः आवाह्य गृहस्यान्तः बहिर्देशे च दीपप्रज्वालनं कुर्मः।

ततः परं दिनं ''नरकचतुर्दशी'' इति व्यवहरामः। तस्मिन् दिने सत्यभामाविशिष्टः श्रीकृष्णः नरकासुरं संहृत्य १६००० सङ्ख्याकनारीः कारागृहात् मोचितवान्। इमं संभ्रमं सर्वत्र प्रसारयाम इति दीपान् प्रज्वाल्य श्रीकृष्णं गेहं प्रति आहूय ''मनोऽन्धकारं निरस्य धियः प्रचोदय'' इति प्रार्थयामः।

ततः परं विद्यमाना ''दीपावलिः'' लक्ष्मीपूजार्हा समृद्धा तिथिः। सर्वे स्वकीयगृहेषु आपणेषु च लक्ष्मीं प्रपूज्य दीपं प्रज्वाल्य निवासे लक्ष्म्याः आवाहनं कृत्वा ''सदा स्थिरा भव'' इति प्रार्थयन्ति।

ततः बलिपाड्यमीति व्यवह्रियते। यतः तदा भगवान् वटुरूपेण आगत्य बलिं पादत्रयं भूमिमयाचत। दत्तां भूमिं त्रिविक्रमरूपेण गणने पादपरिमितभूमेः न्यूनतायां बलिः स्वशिरसि पादप्रक्षेपणं सम्प्रार्थ्य पादपीडनेन पातालं प्राप्तवान् इति विदितविषय एव। सर्वेभ्यः कार्येभ्यः अपि मुख्यं दीपदानम्। एतच्च अस्मिन्दिने विशेषः इति सम्प्रदायः। तेन पितृदेवताः अस्मदीयाः तृप्ताः भवन्ति तथा अस्माकमपि मोक्षमार्गः सुगमो भवतीति वृद्धवचनम्। सामान्येन कार्तिकमासेऽस्मिन् आमासं दीपदानं प्रशस्तफलदमिति पुराणवचनम्। दीपवलिपर्वणि तु दीपदानमत्यन्तं पुण्यफलदमिति प्राज्ञाः ब्रुवन्ति।

किञ्च दीपप्रज्वालनाय उपयुज्यमानं तैलं तिलतैलं अथवा गोघृतं वा भवति चेत् अत्युत्तमम्। एवं वर्तिका अपि यदि ऊर्ध्वमुखे प्रज्वलति तदा अतिश्रेष्ठं भवति अथवा वर्तिका उत्तरस्याः पूर्वस्याः वा दिशः प्रज्वालनीया। एवं विविधरूपेण दीपान् प्रज्वाल्य चित्तस्य अज्ञानरूपान्धकारं निरस्य ज्ञानरूपं प्रकाशं प्रदर्शयतु इति देवदेवं प्रार्थनपूर्वकं कार्तिकमासनियामकं राधादामोदरं भक्त्या प्रणमेत्।

अस्माकं सप्तगिरिनामकेऽस्मिन् तदा आस्थानं निर्वहन्तः तद्दिनस्य विशेषान् देवदेवस्य पुरतः विज्ञाप्य सर्वं तस्मै समर्पयन्ति।

अस्मिन् महापर्वणि सर्वे दीपानां आवलीः प्रज्वाल्य ''विश्वस्य भीतिजनकानेकभयङ्ररोगादिभिः प्रजाः रक्षतु'' इति अखिलाण्डकोटिब्रह्माण्डनायकं विज्ञापयामः।



**समस्तपाठकबन्धुवर्गस्य दीपावल्याः शुभाकाङ्क्षाः। तथा सर्वेषां सप्तगिरिशस्य कृपाशीर्वादाश्च निरन्तरं प्रसरन्तु इति आशास्महे सप्तगिरिमासपत्रिकापक्षतः।**



*वेङ्कटाद्रिसमं स्थानं*
*ब्रह्माण्डे नास्ति किञ्चन ।*
*वेङ्कटेशसमो देवो*
*न भूतो न भविष्यति ॥*



# सप्तगिरिः


तिरुमल-तिरुपतिदेवस्थानानां सचित्रमासपत्रिका

सम्पुटिः-०८ सञ्चिका-०८

## नवम्बर् २०२१

श्री प्लवनामसंवत्सरस्य आश्वयुजकृष्णैकादशीतः
कार्तिककृष्णैकादशीपर्यन्तम् - १९४१




मुखचित्रम् - श्रीस्वामिनः पुष्पयागमहोत्सवः, तिरुमल

अन्तिमरक्षापुटः - श्रीस्वामिनः आलये दीपावलिः, तिरुमल


गौरवसम्पादकः:-
डा.के.एस्.जवहर् रेड्डि I.A.S.,
कार्यनिर्वहणाधिकारी, ति.ति.देवस्थानानि

प्रकाशकः - प्रधानसम्पादकः
डा॥ के.राधारमणः, M.A., M.Phil., Ph.D.,

सम्पादकः - डा॥ वि.जि.चोक्कलिङ्गम्, M.A., Ph.D.,

मुद्रापकः - श्री पि.रामराजु, M.A.,
प्रत्येकाधिकारी
प्रकाशनमुद्रणविभागः, ति.ति.दे.,
मुद्रणालयः, तिरुपतिः।

छायाचित्रग्रहणम् - श्री पि.एन्.शेखरः, छायाचित्रग्राहकः, ति.ति.दे.
श्री बि.वेङ्कटरमणः, सहायक-छायाचित्रग्राहकः, ति.ति.दे.


### सूचना
मुद्रितलेखानां विचाराः लेखकानामेव।
एतद्विषये अस्माकं दायित्वं नास्ति।
— *प्रधानसम्पादकः*


### सङ्केतः
प्रधानसम्पादकः,
सप्तगिरिः, ति.ति.देवस्थानानि
तिरुपतिः - ५१७ ५०७.
दूरभाषा - ०८७७ - २२६४५४३, २२६४३५९,
२२६४३६०
सूचनानाम्, आक्षेपाणां च कृते
सम्पर्कं कुर्वन्तु -
sapthagiri.helpdesk@tirumala.org



एका पत्रिका : रू.५/-
वार्षिकग्राहकत्वम् रू.६०/-



# नरकासुरवधः

- डा.स्वर्ण साम्बशिवराव्
चरवाणी - ९९८९४९१६००

सुरमानवदैत्यादिभिः न कैरपि कस्मादपि पराजयः मा भूदिति पद्मसंभवात् वरान् प्राप्य नूतनश्रिया मदोन्मत्तः अप्रमेय दैत्यसेनासहायेन नरकासुरः प्रथमम् अमरावतीम् आक्रमणाय गत्वा देवेन्द्रं युद्धाय आहूतवान्। तदा देवेन्द्रः बलसमेतः रणरङ्गं प्रस्थितः।

ऐरावतगजमारुह्य, वज्रायुधं हस्ते गृहीत्वा देवेन्द्रः समरे आगतवान्। नरकः सिंहनादं कृत्वा इन्द्रस्योपरि बाणवर्षं कृतवान्। तयोः घोररणमभूत्। यमः, वरुणः, कुबेरः तेषां सैन्यैः इन्द्रस्य पक्षे। हयग्रीवः, निशम्भुः, दानवनायकाः महारणे देवगणैः युद्धं कृतवन्तः। तदा वरुणः, यमः कुबेरश्च रणभूमेः पलायिताः। समरे देवेन्द्रः पराजितः।

नरकः अमरावतीम् आक्रम्य तस्यां सर्वसम्पदं यथेष्टम् अनुभवति।

एकस्मिन् दिने नरकः नाकलोके सिंहासनमधिष्ठाय ऊर्वशीम् आहूय एवमब्रवीत्। इन्दुमुखि! अहम् इन्द्रं, यमं, वरुणं, कुबेरं देवाधिपान् सर्वान् जितवानस्मि। अहमेव सर्वलोकेश्वरः सर्वलोकपूज्यः इति।

**वसिष्ठादिमहर्षयः द्वारकां प्रति आगतवन्तः :-** अनन्तरं वसिष्ठादिमुनयः सर्वे दक्षिणाभिमुखाः पुण्यतीर्थेषु स्नानानुष्ठानादिकम् आचर्य द्वारकाम् आगतवन्तः। ते गृहद्वारे स्थित्वा द्वारपालकं प्रति ''बदरीवननिवासिनः तापसाः आगताः'' इति प्रभुं विज्ञापयतु इति उक्तवन्तः। द्वारपालकः अन्तः गत्वा तथैव उक्तवान्।

तत् श्रुत्वा मधुसूदनः ''तान् महाभागान् अन्तः आनयतु इति प्रद्युम्नं आज्ञापितवान्। प्रद्युम्नः बहिर्गत्वा तान् सर्वान् ऋषीन् नमस्कृत्य सादरेण अन्तः आनीतवान्। वशिष्ठादिमहर्षयः अन्तरागत्य रत्नसिंहासने आसीनं श्रीहरिं दृष्ट्वा महानन्दपरवशचित्ताः ''तपः तपः इति अरण्येषु स्थितानां जडमतीनाम् अस्माकम् अद्य श्रीविष्णुः दर्शनं ददाति।'' एतददृष्टं अस्माकम् सुररिपोः नरकासुरस्य पीडया बहुकालानन्तरं लब्धं दर्शनभाग्यम् इति चिन्तयन्तः ऋषयः नारायणं प्रार्थयामासुः।

जनार्दनः झटिति ससंभ्रमम् उत्थाय नमस्कृत्य अतिथीन् गौरवेण पूजयित्वा तेषां उचितासनानि दत्वा

तेषामनुज्ञया सोऽपि आसीनः अञ्जलिं घटित्वा एवमुक्तवान्, महनीयाः युष्माकं तपांसि निर्विघ्नेन प्रचलन्ति वा? भवदाज्ञानुबद्धे मयि प्रीत्या भवन्तः अत्रागमनकारणं आज्ञापयन्तु अवश्यं पालयामि इति।

ततः ते सर्वे साञ्जलिना "हे परमात्मन्! धरणीदेव्याः तनयः नरकासुरः ब्रह्मणा वरान् प्राप्य मदोन्मत्तः त्रिलोकान् पीडयति। अस्माकं यागानाम् तपसाम् च विघ्नं करोति, स्त्रीः अपि पीडयति, सः दुरात्मा अनिर्वचनीयया हिंसाप्रवृत्त्या लोकान् बाधते। तस्य दुष्कर्माणि लोकरक्षकाय तुभ्यं निवेदयितुं वयमत्रागताः। तस्य वधाय भवानेव समर्थः, तस्य वधं कृत्वा लोकरक्षणं कुरु देव! इति ते प्रार्थनां कृत्वा गतवन्तः।

**इन्द्रेण श्रीकृष्णदर्शनायागमनम् -** अनन्तरं श्रीकृष्णः नरकासुरवधस्य विषये यादववीरैः चर्चां करोति। तदा एव आकाशात् इन्द्रः आगत्य मुकुन्दस्य पुरतः स्थितवान्।

इन्द्रः श्रीकृष्णं नमस्कृत्य एवं विज्ञापयति, वासुदेव! नरकासुरः इति दुष्टराक्षसः ब्रह्मणा वरान् प्राप्य तस्य बलेन अमरावतीं स्वायत्तीकृतवान्। समरे पराजिताः असुरेण, वयं सर्वे गृहाणि ऐश्वर्यं परित्यज्य इतस्ततः चरन्तः स्मः। अदितेः रत्नकुण्डलान्यपि नरकासुरः अपहृतवान्। नरकासुरः मुनीनाम् आश्रमाणां ध्वंसं कृतवान्। सः लोककण्टकः इव हिंसाप्रवृत्त्या प्रजाजीवनं नाशनं करोति इति नरकासुरदुर्नीतिम् उक्त्वा इन्द्रः गतवान्।

**श्रीकृष्णः सत्यभामासहकारेण नरकासुरवधाय प्रस्थितः-** श्रीकृष्णः सत्यभामा च गरुडस्य स्कन्धारोहणं कृत्वा आकाशमार्गे नरकासुरपुरं गतवन्तौ तेन युद्धाय। नरकासुरः अनेकशरान् कृष्णस्योपरि अपातयत्। कृष्णस्य सहायकः वैनतेयः वज्रायुधघातेन कम्पितः पर्वतः इव पतितवान्।

पुनः नरकासुरः एकं शरं कर्णान्तम् उत्कृष्य कृष्णस्योपरि अमुञ्चत्। सः शरः कृष्णस्य फालफलके अपतत्। झटिति पार्श्वे स्थिता सत्यभामा तं शरम् अपनीय रक्तं क्षालयित्वा माधवं गतश्रान्तं कृतवती।

तदा कृष्णस्य अनुज्ञया सत्यभामा नरकासुरेण युद्धं कर्तुं वीररसमूर्तिभावेन कृन्तान्, अर्धचन्द्रशरान् इत्यादीन् आयुधान् गृहीत्वा बहुमुखेन नरकस्योपरि मुक्तवती। नरकासुरः विकटाट्टहासेन सत्यभामया प्रयुक्तान् आयुधन् विच्छिद्य वेगेन सोऽपि बाणान् अमुञ्चत्। सत्यभामा तस्य बाणान् अविगणय्य सा पुनः अतिबलेन आयुधानि विसृज्य नरकस्य अश्वान् सूतं च भूमौ अपातयत्। नरकोऽपि एकां गदां गृहीत्वा तस्याः उपरि प्रयुयोज। तां गदां मार्गमध्ये सत्यभामा तिलप्रमाणशकलां कृतवती। तस्याः युद्धं वीक्ष्य सुरगणाः आकाशे प्रशंसां कृतवन्तः।

तदा स देवदेवः उत्थाय सत्यभामाहस्तात् धनुः गृहीत्वा समराय प्रस्थितः। अत्रान्तरे नरकासुरः अन्यरथमारुह्य कार्मुकम् धृत्वा परवशेन कृष्णं, सत्यभामां गरुत्मन्तं च लक्ष्यमकरोत्। वीररणाङ्गणे माधवः नरकं खण्डयितुं निश्चित्य, सर्वदानवनिषूदनं, प्रचण्डम्, अत्यद्भुतक्रमं तस्य सुदर्शनचक्रं हस्ते गृहीत्वा नरकासुरम् लक्षीकृत्य अत्यजत्। तत् चक्रं नराकासुरं स्पृष्ट्वा तस्य शरीरमापादमस्तकं भागद्वयेन खण्डयित्वा तं नरकासुरं हत्वा पुनः श्रीहरेः हस्तम् अलञ्चकार।

तदा देवाः ऋषयः समस्तलोकाश्च नरकासुरवधानन्तरम् अतीव सन्तुष्टाः। तस्मिन् दिने सर्वाः प्रजाः आनन्देन दीपावली इति उत्सवं कृतवन्तः। प्रतिवर्षं आश्वयुजमासे बहुलपक्षे अमावास्यातिथौ अमुमुत्सवं कुर्वन्ति। इदमेव दीपावल्याः माहात्म्यम्।





# कृष्णामृतम्

- श्री बिल्वमङ्गलस्वामी

मातः किं यदुनाथ देहि चषकं किं तेन पातुं पयः
तन्नास्त्यद्य कदास्ति वा निशि निशा का वाऽन्धकारोदयः।
आमील्याक्षियुगं निशाप्युपगता देहीति मातुर्मुहुः
वक्षोजांशुककर्षणोद्यतकरः कृष्णस्स पुष्णातु नः।। २-६० (लीलाशुकः)



आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः।



# अन्नमाचार्यसङ्कीर्तनवैभवम्

- डा.समुद्राल लक्ष्मणय्य
चरवाणी - ७९९३६६९२१६

सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम्।
एकमापातमधुरमन्यदालोचनामृतम्।।

इत्याभाणकं लोके प्रसिद्धम्। कलासु विविधासु सङ्गीतस्य साहित्यस्य च या प्रशस्तिः श्रूयते सा अन्यत्र नैव श्रवणगोचरा भवति। इदं कलाद्वयं मनुष्यस्य जीवितं सुसम्पन्नं करोति। अत एवोक्तं **सङ्गीतसाहित्यकलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः** इति।

कलानां चतुष्षष्ठिः परिगण्यते। कलाः सर्वा अपि भगवद्विभूतय एव। ततश्च भगवदाराधनार्थमेव कलास्सर्वा अपि विनियोज्या भवन्ति। तथा कुर्वन्तः कलानिपुणाः भगवदनुग्रहं प्राप्नुवन्ति।

सङ्गीते साहित्ये च निष्णाताः केचिद्वाग्गेयकाराः त्यागराजादयः श्रूयन्ते। स्वकविताकलां सङ्गीतनैपुण्यं च भगवते समर्प्य ते धन्यजन्मानो बभूवुः। तादृशेषु वाग्गेयकारेषु अग्रगण्यः श्रीताल्लपाक अन्नमाचार्यः। **पदकवितापितामहः** इति अस्य प्रशस्तिः। भगवत्सङ्कीर्तनमेव स्वजीवितस्य लक्ष्यं कृत्वा सहस्रशः सङ्कीर्तनानि वेङ्कटेश्वरस्तुतिपराणि विरचय्य अयं सङ्कीर्तनाचार्यः जगद्विख्यतो बभूव।

पञ्चदशशताब्द्याः प्रथमपादे रायलसीमान्तर्गते कडपमण्डले ताल्लपाकनामके ग्रामे लब्धजन्मा अयं महानुभावः बाल्यात्प्रभृति श्रीनिवासपदाराधनपरो बभूव। श्रीवेङ्कटेश्वरस्य कीर्तिवैभवं द्वात्रिंशत्सहस्रसंख्याकैः सङ्कीर्तनैः अनेन कवितल्लजेन संस्तुतम्। परन्तु अधुना माकिं चतुर्दशसहस्रसंकीर्तनान्येव तेषु उपलभ्यन्ते। शृङ्गारसङ्कीर्तनानि, आध्यात्मिकसङ्कीर्तनानि च इति तत्र द्वेधा भेदः संलक्ष्यते। अपि च उपलब्धेषु सङ्कीर्तनेषु संस्कृतभाषायां निबद्धान्यपि कतिपयसङ्कीर्तनानि ताम्रफलकेषु दृश्यन्ते, यानि तत्र दृष्टं क्रममनुसृत्यैव सङ्कीर्तनसंपुटेषु मुद्रितानि सन्ति।

प्राचीनान्ध्रकवयस्सर्वेऽपि संस्कृतरचनायामपि सिद्धहस्ताः बभूवुः। संस्कृतान्ध्रभाषयोः सान्निहित्यमपि सुविदितमेव। तथा च अन्नमाचार्येण विरचितानां संस्कृतसङ्कीर्तनानां वैशिष्ट्यमपि अस्मिन् सन्दर्भे स्मरणीयं भवति।

अन्नमाचार्यः अतिविस्तृतं पदसाहित्यं सृष्ट्वाऽपि तत्र कर्तृत्वाभिमानं न प्रदर्शितवान्। तत एवोक्तं तेन -

ना नालुकपैनुंडि नानासंकीर्तनलु - पूनि नाचे निन्निट्लु पोगडिंचितिवि,
वेनामाल वेन्नुडा विनुतिंच नेन्तवाड- कानिम्मनि नाकीपुण्यमु गट्टितिवीवे यय्या।। (२-३३८) इति।

अर्थात् वेङ्कटेश्वर एव स्वाजिह्वाग्रे स्थित्वा नानासङ्कीर्तनानि गापयामास। नो चेत् भगवद्गुणकीर्तिनसामर्थ्यं स्वस्य नास्तीति, एतत्पुण्यं भगवदनुग्रहफलमेव इति च अन्नामाचार्यस्य अभिप्रायः। **दयाशतककर्ता वेङ्कटनाथः, आन्ध्रभागवतकर्ता पोतनः** इत्यादयः अन्येऽपि भक्तकवयः काव्यनिर्माणे कर्तृत्वाभिमानरहिताः बभूवुः।

अन्नमाचार्येण विरचितानां सङ्कीर्तनानां सारभूतं तत्त्वं किमिति परिशीलनीयं भवति। तस्य अनुयायिभिः अस्मिन् विषये प्रकटितः अभिप्रायः परिगणनीयः। तैरभिहितम् -

सकलवेदमुलनु संकीर्तनलु चेसि- प्रकटिंचि निनु बाडि पावनुडैन,
अकलंकुडु ताल्लपाक अन्नमाचार्युल- वेकलियै येलिन वेङ्कटगिरिनिलय। (अ.सं.६-२४)

ततश्च **इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्** इत्युक्तरीत्या इतिहासपुराणानि वेदार्थविवरणार्थं विरचितानि इति यथा उच्यते तथैव अन्नमाचार्यस्य सङ्कीर्तनान्यपि वेदार्थविवरणद्वारा भगवन्तं स्तोतुमेव निर्मितानीति स्पष्टं भवति।

भक्तिप्रामुख्यम् - वेदेषु कर्मभक्तिज्ञानयोगाः विस्तरेण निरूप्यन्ते। ते योगाः मोक्षसौधारोहणार्थं सोपानानि भवन्ति। संसारसागरं तर्तुं स्वीकरणीयेषु साधनेषु कानिचित् क्लिष्टानि, अपराणि सुलभानि च सन्ति। ज्ञानयोगः क्लेशावह इति, भक्तियोगः प्रपत्तियोगश्च ततोऽपि सुलभतया भगवत्प्राप्तिहेतू भवत इति च शास्त्राणि प्रतिपादयन्ति। अन्नमाचार्यसङ्कीर्तनेषु अस्मिन्कलियुगे सुलभोपायभूतौ भक्तिप्रपत्तियोगौ विपुलतया निर्दिष्टौ।

भक्ति नीपैदोकटे परमसुखमु-
युक्ति चूचिन निजंबोक्कटी लेदु (३-३२२)
भक्ति कोलदिवाडे परमात्मुडु -
भुक्ति मुक्ति ताने इच्चु भुवि परमात्मुडु।। इति। (२-४२०)

इत्यादि वचनैः अन्नमाचार्यः भक्तेः प्रामुख्यं कण्ठोक्त्या निर्दिदेश। भक्तिस्वरूपं नारदादिभिः बहुधा तत्तच्छास्त्रेषु निर्दिष्टमस्तीति वयं जानीमः। सा त्वास्मिन् परमप्रेमरूपा, अनिर्वचनीयं, प्रेमस्वरूपम् इति भक्तिसूत्रेषु नारदो ब्रूते। परन्तु अन्नमाचार्यस्य भक्तिभावना नितरां हृदयङ्गमा भवति। भक्तिस्वरूपमेवं तेन निर्दिष्टम् -

परमसुज्ञानुलकु प्रपन्नुलकु -
मरुगुरुनिमीदट मनसुंडवलदा।।
आकलि गोन्नवानि कन्नमुपै नुंडिनट्टु-
येकट वुंडवलदाईश्वरुनिपै।
काकल विटुल चूपु कान्तलपै नुंडिनट्टु-
तेकुवनुण्डवलदा देवुनि मीदटनु।।
पसिबिड्डलकुनास पाल चंटिपैनुन्नट्टु -
कोसरि भक्ति वलदा गोविंदुनिपै,
वेस देरुवरितमि विडिदलपै नुन्नट्टु -
वसियिंचलवदा श्रीवल्लभुमीदटनु।।
नेप्पुन धनवंतुडु निधि गाचियुंडिनट्टु -
तप्पक श्रीवेङ्कटेशु दगुलवद्दा,
अप्पसमैन भ्रम आलजालालकुन्नट्टु-
यिप्पुडे वुंडवलदा यीतनि मीदटनु।। (१५-४६)

नामसङ्कीर्तनम् - भक्तस्य चित्तं भगवति कथं वा संलग्नं स्यात् इत्ययमंशः अत्र सोदाहरणं हृदयावर्जकया रीत्या प्रतिपादितम्। श्रीमद्भागवते नवविधाः भक्तिमार्गाः परिकीर्तिताः -

श्रवणं कीर्तनं विष्णोः स्मरणं पदासेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।। (७-५-२३)

तत्र संकीर्तनं द्वितीयो मार्गः भवति। तच्च मुक्तिप्राप्तये सुलभः उपायः। विशिष्य कलियुगे प्रमुखं मोक्षसाधनमित्युच्यते। तदुक्तम् -

ध्यायन् कृते यजन् यज्ञैः त्रेतायां द्वापरेऽर्चयन्।
यदाप्नोति तदाप्नोति कलौ केशवकीर्तनात्।। इति।

अर्थात् कृतयुगे ध्यानेन, त्रेतायां यज्ञैः, द्वापरे अर्चनेन यत्फलं लभ्यते तत् कलौ केशवकीर्तनेन प्राप्यत इति।

नामसंकीर्तनं यस्य सर्वपापप्रणाशनम् (भाग.१२-१३-२३) इति भागवते व्यासोक्तिः। नारदादिमुनयः सङ्कीर्तनमाश्रित्यैव मुक्तिं प्रापुः।

नामस्मरणादन्योपायं न हि पश्यामो भवतरणे

इत्यादीनि भक्ताग्रगण्यानां वचनान्यपि अमुमेवाभिप्रायं स्थिरीकुर्वन्ति। अन्नमाचार्यः श्रीहरिसङ्कीर्तनमेव श्रुतिमतमिति प्रतिपादयन् एवं ब्रवीति-

एवं श्रुतिमतमिदमेव पश्चादिह नास्ति।(२-४)

अर्थात् इदमेव वेदमतं, इतः परं न किञ्चिदस्ति। श्रीहरिसङ्कीर्तनमेव जन्मभोगासक्तानां सुखकरं भवति। शेषशयनसेवैव पुनः पुनः मरणगर्तेषु पतितानां इहपरसाधनं भवति। संसारदुरितपीडितानां कंसान्तकप्रशंसैव हिसाविरहितः उपायो भवति इति। भगवत्कीर्तनमेव श्रुतिमतमिति कथं वक्तुं शक्यते? इति चेत् कलियुगे नामसङ्कीर्तनमेव मुक्यातिमुख्यः तरणोपायः इति कलिसन्तरणोपनिषदि प्रतिपादितमस्ति।

कलौ भूसञ्चारार्थं जिगमिषुः नारदः कलिसन्तरणोपायं ब्रूहीति पितरं ब्रह्माणं पृच्छति - अस्त्युपाय इति ब्रह्मा ब्रवीति। "कोऽसौ उपायः" इति पुनः नारदः पृच्छति। तदा ब्रह्मा - भगवतः श्रीमन्नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवति इति वदति। किं तन्नाम इति पुनः प्रश्ने कृते ब्रह्मणा प्रोक्तम् -

हरे राम हरे राम ....... कृष्ण कृष्ण हरे हरे।।
इति षोडशकं नाम्नां कलिकल्मषनाशनम्
नातः परतरोपायः सर्ववेदेषु दृश्यते।। (कलिसन्तरणोपनिषत्)

एवं च कलिसन्तरणोपनिषदि प्रतिपादितं सिद्धान्तमेव स्थिरीकुर्वन् अन्नमाचार्यः - एवं श्रुतिमतमिदमेव इति निश्चप्रचं ब्रवीति।

मतदेवतासमन्वयः - पदकवितापितामहः अन्नमाचार्यः स्वयं स्मार्तकुटुम्बे जातोऽपि पूर्वसंस्कारवशात् भगवता प्रेरितस्सन् अहोबलपीटाधीश्वरात् वैष्णवमतं स्वीचकार। विशिष्टाद्वैततत्त्वं बहुषु सङ्कीर्तनेषु विशदीचकार।

मूडे माटल मूडुमूंडुलु तोम्मिदि-
वेडुकोनि चदुवरो वेदान्तरहस्यमु।। (२-२३३)

इत्यादि सङ्कीर्तनेषु अनेन गायकशिरोमणिना विशिष्टाद्वैततत्त्वं सम्यक्प्रतिपादितम्।

एवं इन्दुलो मोदलि कर्त एव्वडु लेडु काबोलु -
मुंदु करिवरदुडे मुख्युडु काबोलु। (२-६)

इत्यादि सङ्कीर्तनेषु विष्णुपारम्यं उद्धोषितम्।

एवं अन्नमाचार्यः विष्णुभक्तोऽपि (वैष्णवमतस्थोऽपि) मतविषये वा दुराग्रहं न प्रदर्शयति।

एकं सत् विप्रा बहुधा वदन्ति इति वेदवचनम्।
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् इति (४-२२) गीतावचनम्।

पूर्वाचार्याः विविधमतेषु सत्स्वपि तेषां मतानां समन्वयं निर्दिशन्तः एवमूचुः -

यं शैवास्समुपासते...नाथो विभुः।। इति (महानाटके १-३)

एतादृशः विविधमतदेवतासमन्वयमार्गः परमवैष्णवेनापि अन्नमाचार्येण अनुसृतः मुदावहोऽयं विषयः। तेन विरचितं संस्कृतसङ्कीर्तनं एकं शृणुत -

ब्रुवन्ति बौद्धा बुद्ध ... सर्वे केवलमिति च।। (२-२६४)

अत्र विविधमतसमन्वयेन साकं श्रीवेङ्कटेश्वरस्य सकलदेवतास्वरूपत्वं च विस्पष्टं प्रतिपादितम्।

एन्तमात्रमुन नेव्वरु दलचिन-अन्तमात्रमे नीवु।
अन्तरान्तरमुलेञ्चिचूड पिं-डन्ते निप्पटि यन्नट्लु।।(२-३९३)

इत्यादिसुप्रसिद्धतेलुगुसङ्कीर्तने अयमेव समन्वयः निर्दिष्टः - मतकलहदूषितेऽस्मिन् जगति प्रशान्तिं सुखं च प्राप्तुं अन्नमाचार्यदिभिः निर्दिष्टः मतसमन्वयमार्गः नितरामावश्यक इत्यत्र कः सन्देहः?

**भगवद्गुणकर्मनामकीर्तनम्**-भगवान् सकलकल्याणगुणनिलयः। ज्ञानं, बलं, ऐश्वर्यं, वीर्यं, शक्तिः, तेजः इत्यादयो गुणाः भगवति वर्तन्ते। एवं भगवतः कर्माण्यपि आश्चर्यावहानि भवन्ति। विविधेषु अवतारेषु दुष्टशिक्षणार्थं शिष्टरक्षणार्थं च विविधानि कर्माणि भगवता कृतानि। अपि च भगवतः नामान्यपि अनन्तानि भवन्ति। 'जन्म कर्म च मे दिव्यं' (४-२) इति गीतायां भगवानेव ब्रवीति। तदनुसारेण तस्य नामान्यपि बहूनि विराजन्ते। तानि विष्णुसहस्रनामादिषु बहुधा परिकीर्तितानि।

भगवद्वैभवगानासक्ताः कवयः भगवान् स्तुतिप्रियः इति जानन्ति। ततः तत्स्तोत्रेषु भगवतः गुणान्, कर्माणि, नामानि च कीर्तयन्ति। उक्तं च भागवते -

एतावताऽलमघनिर्हरणाय पुंसां यत्कीर्तनं भगवतो गुणकर्मनाम्नाम्।
इति। (भाग.६-३-२४)

तथाच अन्नमाचार्यः पापाननोदनक्षमंसङ्कीर्तनवाङ्मयं निर्माय तत्र बहुधा भगवद्गुणकर्मनामानि कीर्तयामास। अतिविस्तृतेऽस्मिन् सङ्कीर्तनसाहित्ये भगवतः दशावताराः तत्र तत्र संस्कृते आन्ध्रभाषायां च परिकीर्तितास्सन्ति। कुत्रचित् एवमेव अवतारं वर्णयति। अपरत्र दशावतारानपि एकस्मिन्नेव सङ्कीर्तने निबध्नाति। रामावतारवर्णनपरं एकं सङ्कीर्तनं पश्यत-

देवदेवं भजे दिव्यप्रभावं- रावणासुरवैरिरणपुङ्गवम्।।
राजवरशेखरं रविकुलसुधाकरं, आजानुबाहुनीलाभ्रकायम्।
राजारिकोदण्डराजदीक्षागुरं- राजीवलोचनं ामचन्द्रम्।।देव।।
(२-३२४)

दशावतारवर्णनपरम् अपरं सङ्कीर्तनमेवं पठ्यते।

पुडमि निंदरिबद्दे भूतमु कडु- बोडवैन नल्लनि भूतमु,
किनिसि वोडमिंगेडि भूतमु-पुनुकवीपु पेद्द भूतमु-
कनलि कवियु चीकटि भूतमु-पोनुगु सोमपु मोमु भूतमु।।।
इति। (२-२०२)

अवतारणां वर्णनावसरे अन्नमाचार्यः कवितायाः प्राणप्रदं चमत्कारं बहुविधं प्रदर्शयति।

दशविधाचरणं तन्न ......... केलिरुचये तत्र।।दश।। इत्यादि (५-३७४)

**मधुरभक्तिः** - नारदः स्वभक्तिसूत्रेषु **'यथा व्रजगोपिकानाम्'** इति गोपिकाभक्तिं श्रेष्ठां निर्दिदेश। गोपिकानां भक्तिः मधुरभक्तिरिति सम्प्रदायः। अन्नमाचार्योऽपि मधुरभक्तिविधानमाश्रित्य सहस्रशः शृङ्गारसङ्कीर्तनानि रचयामास। भगवानेक एव पुरुषः, अन्ये जीवात्मानः सर्वेऽपि स्त्रीप्राया एवेति मधुरभक्तिवादिनः कथयन्ति। 'स्त्रीप्रायमितरज्जगत्' इत्यादिवचनान्यत्र प्रमाणानि भवन्ति।

राधाकृष्णयोः नायिकानायकभावं परिकल्प्य जयदेवः अन्नमार्यात् पूर्वमेव शृङ्गारगीतानि निर्मितवान्। तानि गीतानि जगत्प्रसिद्धानि। तस्यैव जयदेवस्य सरणिमाश्रित्य अन्नमार्यः जीवदेवयोः नायिकानायकभावं स्थिरीकृत्य सुविशालं सङ्कीर्तनसारस्वतं ससर्ज।

अत्रान्यः कश्चन विषयोऽवधेयो भवति। पद्मावतीश्रीनिवासयोः संयोगशृङ्गारवर्णनं मातापित्रोः संयोगवर्णनमिव अनौचित्यास्पदं भवति खलु इति चेत् कवेः लोकोत्तरप्रतिभा तादृशदोषं दूरीकरोतीति आनन्दवर्धनेन कालिदासस्य विषये यत्समाधानमुक्तं, तदेवात्रापि परिग्राह्यम्। अन्नमाचार्योऽपि कालिदासादिवत् लोकोत्तरप्रतिभामूर्तिरित्यत्र न काऽपि संशीतिः।

(अनुवर्तते)





११-१०-२०२१ दिनाङ्के तिरुमल - ब्रह्मोत्सवाङ्गगरुडसेवायाम् आन्ध्रप्रदेशस्य प्रभुत्वपक्षतः मान्यमुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि महाभागाः श्रीस्वामिने वस्त्राणि अर्पितवन्तः। तेभ्यः तत्र आशीर्वादप्रदातारः श्री श्री श्री पेद्दजीयर् तथा चिन्नजीयर् स्वामिनः च।





११-१०-२०२१ दिनाङ्के अलिपिरि समीपे ''श्री वेङ्कटेश्वर सप्तगोप्रदक्षिणमन्दिरसमुदायं'' प्रारभ्य, गवे ग्राससमर्पकाः, प्राङ्गणपरिशीलकाः आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिणः श्री वै.यस्.जगन्मोहन् रेड्डि महोदयाः।








११-१०-२०२१ दिनाङ्के पुनर्निर्मितालिपिरिपादयात्रापथप्रारम्भः।
१२-१०-२०२१ दिनाङ्के तिरुमल श्रीस्वामिनः आलये तुलाभारकार्यक्रमे गौरवमुख्यमन्त्रिणः श्री वै.यस्.जगन्मोहन् रेड्डि महोदयाः, तेभ्यः आशीःप्रदातारः अर्चकाः च।

## तिरुमल श्रीस्वामिनः आलये ०७-१०-२०२१ तः १५-१०-२०२१ पर्यन्तम्



सेनाधिपति उत्सवः



ध्वजारोहणम्



महाशेषवाहनम्



सिंहवाहनम्



कल्पवृक्षवाहनम्



सर्वभूपालवाहनम्

## एकान्ततया आचरितानां श्रीस्वामिनः वार्षिकब्रह्मोत्सवानां दृश्यानि



गरुडवाहनम्



हनुमद्वाहनम्



गजवाहनम्



सूर्यप्रभवाहनम्



चंद्रप्रभवाहनम्



चक्रस्नानम्



११-१०-२०२१ दिनाङ्के तिरुमल श्रीस्वामिनः आलये २०२२ नूतनवर्षस्य दैनन्दिन्यादीनाम्
आविष्कर्तारः आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि
महोदयाः। तत्र च मन्त्रिवर्याः, ति.ति.दे. पालकमण्डल्यध्यक्षाः तथा इतरोन्नताधिकारिणश्च भागग्राहिणः अभवन्।



११-१०-२०२१ दिनाङ्के तिरुपति बर्ड चिकित्सालयप्राङ्गणे "श्री पद्मावती
चिन्नपिल्लल गुण्डे चिकित्सल आसुपत्रि" (बालानां हृदयचिकित्सालयस्य) आरम्भे
मान्यमुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि महाभागाः। तत्र च मन्त्रिवर्याः,
ति.ति.दे. पालकमण्डल्यध्यक्षाः तथा इतरोन्नताधिकारिणश्च भागग्राहिणः अभवन्।





१२-१०-२०२१ दिनाङ्के तिरुमलक्षेत्रे एस्.वि.बि.सि. कन्नड, हिन्दि प्रसारकेन्द्रप्रारम्भे आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि महाभागाः।
तत्र च मान्त्रालयं श्रीराघवेन्द्रस्वामिमठस्य पीठाधिपतयः श्री श्री श्री सुबुधेन्द्रतीर्थाः,
मन्त्रिवर्याः, ति.ति.दे. पालकमण्डल्यध्यक्षाः तथा इतरोन्नताधिकारिणश्च भागग्राहिणः अभवन्।



१२-१०-२०२१ दिनाङ्के तिरुमल श्रीस्वामिनः आलये नवीन बून्दीपोटु प्रारम्भे
आन्ध्रप्रदेशस्य मान्यमुख्यमन्त्रिवर्याः श्री वै.यस्.जगन्मोहन् रेड्डि महोदयाः।
तत्र च मन्त्रिवर्याः, ति.ति.दे. पालकमण्डल्यध्यक्षाः तथा इतरोन्नताधिकारिणश्च भागग्राहिणः अभवन्।



२५-०९-२०२१ दिनाङ्के ति.ति.दे. तिरुपति संयुक्तकार्यनिर्वहणाधिकारित्वेन
पदवीस्वीकर्तारः श्री वि.वीरब्रह्मम् ऐ.ए.एस्., महाभागाः।

# केरलीयज्योतिषशास्त्रानुसारेण प्रश्नभागस्य वैविध्यम्

- श्री के.बि.वैशाखन्
चरवाणी - ९९८५१७७०६४



**अष्टमङ्गलप्रश्नः इति पदस्य औचित्यम् -**

शुद्धायां भूमौ राशिचक्रं विलिख्य तत् परितः काञ्चनं, दर्पणं, पुष्पम् अक्षतं, फलसञ्चयं, ताम्बूलं, वसनं, ग्रन्थश्चेति अष्टौ मङ्गलवस्तूनि विन्यस्य राशिचक्रस्य पूजा क्रियते। पूजावसाने ब्रह्मार्पणात् परं वाग्देवीं गुरुं च अष्टमङ्गलेषु संवन्द्य, ततः परं चक्रे स्वर्णविन्यासः क्रियते। अष्टौ मङ्गलवस्तूनि पूज्यन्ते इति हेतोः अयं प्रश्नः अष्टमङ्गलप्रश्नः इत्याख्यायते। किन्तु शास्त्रदृष्ट्या एतावता एव अस्य एतन्नाम न भवति। यतः स्वर्णारूढप्रश्ने अपि अष्टमङ्गलवस्तूनां विन्याससम्प्रदायः दृश्यते। प्रश्नशास्त्रे तु राशिचक्रपूजानन्तरं स्वर्णविन्यासावसरे साष्टकशतानां वराटिकानां त्रिधा विभागविधिरेव अष्टमङ्गलकर्म इत्युच्यते। एतदेव 'प्रारभेताष्टमङ्गलम्' इति प्रश्नमार्गे अष्टमङ्गलमिति नाम्ना निर्दिष्टम्। त्रिधा विभक्तानां वराटिकानां प्रत्येकस्मिन् विभागे अष्टशः वराटिकाः त्यक्त्वा शिष्टाः सङ्ख्याः अष्टमङ्गलसङ्ख्याः इत्युच्यन्ते। तत्र वामस्थेन भूतकालचिन्तनं, मध्यस्थेन वर्तमानकालचिन्तनं, दक्षिणस्थेन भाविफलचिन्तनमिति त्रैकाल्यजफलं दैवज्ञैः चिन्त्यते। एतद् अष्टमङ्गलकर्म अस्य प्रश्नस्य प्रधानांशः। अत एव पूर्वोक्तांशद्वयेन अष्टमङ्गलप्रश्नः इति अस्य प्रश्नस्य अन्वर्थं नाम। अस्मिन् प्रश्नकर्मणि अष्टानां मङ्गलवस्तूनां विन्यासः, स्वर्णनिक्षेपः, अष्टमङ्गलसंख्याविभागश्च वर्तते।

यस्मिन् प्रश्ने वराटिकानां विभागो नास्ति, तस्मिन् स्वर्णारूढप्रश्नेऽपि अष्टमङ्गलवस्तूनां विन्यासः क्रियते। तथापि तस्य प्रश्नस्य अष्टमङ्गलप्रश्नः इति न व्यवहारः। किन्तु वराटिकानां त्रिधा विभागरूपं अष्टमङ्गलकर्म यत्र वर्तते तत् कर्मयुक्त एव अष्टमङ्गलप्रश्नः इति नाम भजते। अतः अष्टानां मङ्गलवस्तूनां विन्यासः स्वर्णनिक्षेपेण आरूढनिर्णयः वराटिका विभागेन अष्टमङ्गलसङ्ख्यानयनं च यस्मिन् प्रश्ने वर्तते स एव 'स्वर्णाष्टमङ्गलप्रश्नः' इति प्रश्नशास्त्रे अत्युन्नतस्थाने विराजते।

अस्य स्वर्णाष्टमङ्गलप्रश्नस्य चिन्तनावसरे प्रधानदैवज्ञेन सह अन्ये द्वित्राः त्रिचत्वारो वा दैवज्ञाः भवन्ति। तेऽपि प्रश्नविमर्शं कुर्वन्ति। अन्ये धर्मशास्त्रज्ञाः शिल्पशास्त्रज्ञाः आगमशास्त्रज्ञाश्च सदसि समवेताः भवन्ति। दैवज्ञैः कृतानां चिन्तनानां विमर्शकः अपरः प्रश्नकारः दैवज्ञः भवति। सः देशभाषायां 'चोद्यकारः' इति कथ्यते। तस्य पूर्वपक्षं शास्त्रवचनैः निराकृत्य दैवज्ञः फलानि निर्णयति। एवं शास्त्रीयविमर्शेन फलनिर्णयः अष्टमङ्गलप्रश्ने भवति।

**ताम्बूलप्रश्नः -** पूर्वोक्तं स्वर्णप्रश्ने, स्वर्णाष्टमङ्गलप्रश्ने च स्वर्णनिक्षेपकालस्य लग्नस्फुटः ग्रहस्फुटाश्च गृह्यन्ते। किन्तु प्रष्ट्रा दत्तानां ताम्बूलानां संख्यामाधारीकृत्य आरूढराशिं निर्णीय यत्र फलप्रवचनं क्रियते सः ताम्बूलप्रश्नः इति कथ्यते। स च ताम्बूलारूढनिर्णयः प्रश्नमार्गे

**ताम्बूलसंख्यां द्विगुणां शरघ्नां सैकां हरेत्सप्तभिरत्र शिष्टैः।**
**सूर्यादिकानामुदयोऽत्र कल्प्यो ग्रहोदयो यत्र स लग्नराशिः॥**

(प्रश्नमार्गः, १६-५०)

इति प्रतिपादितः। ताम्बूलसंख्यां दशभिः सङ्गुण्य एकं तत्र संयोज्य सप्तभिः विभजेत्। शिष्टसंख्यातुल्यः सूर्यादितः ताम्बूलग्रहो ज्ञेयः। सः ग्रहः तद्दिने यस्मिन् राशौ वर्तते, सः ग्रहोदयराशिरेव 'ताम्बूलारूढराशिः' भवति। तद्राशिं केन्द्रीकृत्य ग्रहाणां भावफलादिकथनं क्रियते। अत्र ताम्बूलप्रदानसमयस्य लग्नस्फुटं ग्रहस्फुटानपि स्वीकृत्य षडारूढकल्पनं फलचिन्तनं च क्रियते। अत्र स्वर्णनिक्षेपः, राशिचक्रपूजा, अष्टमङ्गलविभागादयः न सन्ति। प्रष्ट्रा दत्तेषु ताम्बूलेषु

आदिमैः द्वादशताम्बूलैः छिद्रह्रस्वदीर्घादिलक्षणानि विलोक्यापि द्वादशभावचिन्तनं क्रियते। पूर्वाह्णे ताम्बूलदानं चेत् उपरि आरभ्य, अपराह्णे चेत् अधस्तात् प्रभृति द्वादशभावसम्बन्धिताम्बूलानि गणयन्ति। एषः ताम्बूलप्रश्नः इत्युच्यते। स्वर्णारूढप्रश्ने स्वर्णाष्टमङ्गलप्रश्ने च अङ्गतया दत्तानां ताम्बूलानां चिन्तनं क्रियते, न तु प्रधानतया।

**आरूढप्रश्नः -** प्रष्टुः नामनक्षत्रे सङ्कल्प्य, दैवज्ञः वराटिकाः संस्पृशन् 'एतन्नक्षत्रसञ्जातस्यैतन्नाम्नोऽस्य पृच्छतः' (प्रश्नमार्गः, ४-४२) इत्यादिसङ्कल्पश्लोकान् परिजप्य, मूर्तित्वपूर्वकान् मन्त्रानपि जपन् मन्त्रजपान्ते दैवप्रेरणानुसारं वराटिकासङ्घात् काश्चन वराटिकाः दक्षिणहस्तेन स्वीकृत्य अन्यत्र स्थापयेत्। लब्धवराटिकाभ्यः द्वादश-द्वादश वराटिकाः सन्त्यज्य शिष्टवराटिकाः ज्ञेयाः। अत्र मेषादितः शिष्टवराटिकासंख्यातुल्यराशिरेव आरूढराशिरिति स्वीक्रियते। दक्षिणहस्तेन वराटिकास्वीकारसमयस्यैव उदयलग्नं ग्रहस्फुटानपि ज्ञात्वा फलनिरूपणं क्रियते। अत्र राशिचक्रपूजा, स्वर्णनिक्षेपः, अष्टमङ्गलविभागश्च न वर्तन्ते। केवलं आरूढनिर्णयः विद्यते इति हेतोः अस्य आरूढप्रश्नः इति नाम। अत्रापि अङ्गत्वेन ताम्बूलदानं तद्वशात् फलचिन्तनं च बहुभिः दैवज्ञैः क्रियते।

अनेन क्रमेण आरूढनिर्णयः प्रश्नग्रन्थेषु कुत्रापि प्रतिपादितः न दृश्यते। किन्तु लोके एषः सम्प्रदायः दृश्यते। अष्टमङ्गलप्रश्ने तत्कालप्रश्नादिषु च सर्वेषु परिहारनिर्णयादिषु अनेनैव क्रमेण आरूढराशिः स्वाक्रियते।

एवम् आरूढनिर्णयभेदेन प्रश्नस्य नामभेदाः भवन्ति। तेषु फलनिर्णये शास्त्रोक्तानां केपाञ्चन अङ्गनां लोपाच्च तारतम्यं स्यादेव। अतः प्रश्नशास्त्रे पूर्वोक्तचतुर्विधप्रश्नकर्मणां स्थानम् एवं निर्णेतुं शक्यते।

**१. अष्टमङ्गलप्रश्नः। २. स्वर्णारूढप्रश्नः। ३. ताम्बूलारूढप्रश्नः।**
**४. आरूढप्रश्नः।**

अतः यथा लोके न्यायाङ्गव्यवस्था वर्तते तथैव अत्र स्वर्णाष्टमङ्गलप्रश्ने निर्णीतानां विषयाणां परमं प्रमाणं भवति। तदुक्तनिर्णयाणाम् अन्यैः प्रश्नैः निराकरणं कर्तुं न शक्यते।

**प्रश्ने आरूढस्यैव प्राधान्यम् -** केरलाद्बहिः पृच्छाकालिकोदयलग्नं केन्द्रीकृत्यैव प्रश्ने फलानि कथ्यन्ते इति हेतोः अस्य प्रश्नशास्त्रमिति अन्वर्थं नाम। केरलीयपद्धतौ तु स्वर्णविन्यासेन आरूढराशिः निर्णीयते। स्वर्णविन्यसकालिकोदयलग्नमपि प्रश्नचिन्तायां स्वीक्रियते। संशीतिर्जायते द्वयोः कस्य प्राधान्यमिति। कृष्णीयादिषु केरलीयप्रश्नग्रन्थेषु, प्रश्ने प्रश्नकालिकोदयलग्नात् आरूढाश्च फलं चिन्तयेदिति कथितमस्ति (भूमिष्ठं स्थिरचक्रं चरति तथाकाश एव चरचक्रम्) केरलप्रश्नशास्त्रे आरूढलग्नयोः उभयोः तुल्यं प्राधान्यं दृश्यते। अतः प्रश्नग्रन्थोक्तश्लोकेषु लग्नशब्देन आरूढराशिरपि गृह्यते। पापे लग्नगते पराजयशिरोरुक् इत्यादिषु श्लोकेषु लग्नमिति पदेन आरूढराशिरपि स्वीक्रियते। उत्तरभारतीयप्रश्नग्रन्थेषु लग्नपदमेव वर्तते न तु आरूढपदम्। यथा दैवज्ञवल्लभायाम् -

**यातुः पृच्छालग्नतः सप्तमस्य**
**स्वामियायाद्यावता वक्रभावम्।**
**कालेनैति प्रस्थितस्तावतेति**
**प्राहुस्त्वेते प्रश्नतत्त्वप्रवीणाः।।** इति।

(दैवज्ञवल्लभा)

अत्रत्यलग्नपदेन केरलीयचिन्तने आरूढराशिः गृह्यते। प्रश्नमार्गकारः 'प्रश्नः खलु उदयारूढप्राधान्येन द्विधा मतः' इति उदयलग्नात् कदा चिन्तयेत्, आरूढात् कदा विमृशेदिति विभागं ग्रन्थान्तरवचनैः दर्शयति। किन्तु अस्य विमर्शस्य अन्ते प्रश्नमार्गकारः स्वमतमेव दृढीकरोति।

**निरन्तरोद्यतां भानां कस्याप्यस्त्युदयः सदा।**
**तथाप्यारूढवाञ्छा यत् ततोऽस्यैव प्रधानता।। इति।**

(प्रश्नमार्गः, ९-३५)

राशिचक्रस्य निरन्तरगतिसद्भावात् प्रश्नकालिकोदयलग्नस्य सर्वदा सद्भावः। प्रायः घण्टाद्वयम् एकमेव उदयलग्नम्। घण्टाद्वयान्तरेण प्रश्नकर्तॄणां मनेषाम् उदयलग्नमेकमेव भवति। अतः फलनिर्णयार्थम् आरूढराशिः स्वीकृतः। पृच्छकारूढराशेः सन्धिस्थित्यादिना दुर्ज्ञेयत्वेन भगवत्पूजापूर्वकं स्वर्णविन्यासेन आरूढराशिः निर्णीतः। अनेन एकस्य राशेः उदयसमये प्रश्नभेदेन यः कोऽपि राशिः आरूढराशिः भवेत्। प्रश्नकालिकोदयलग्नस्य सद्भावेऽपि आरूढराशेः पृथक् स्वीकारात् केरलीयप्रश्नपद्धतौ आरूढराशेः प्राधान्यम्। आरूढराशिं केन्द्रीकृत्य फलनिर्देशः प्रश्नः इत्युच्यते।

**आरूढोदयलग्नांशच्छत्रस्पृष्टाङ्गराशयः।**
**चन्द्राधिष्ठितराशिश्च चिन्त्याः षट् प्रश्नकर्मणि।। इति।**

(प्रश्नमार्गः, ८-१)

अष्टमङ्गलप्रश्नकर्मणि फलनिर्देशे सूक्ष्मफलप्राप्त्यर्थं, फलस्फुटतां च प्राप्तुं षडारूढः क्रियते। एतेषु षडारूढप्रश्नेषु प्रश्नक्रिया सम्भवस्य पूर्णतां प्राप्तुं शक्यते।

**उपसंहारः -** स्वर्णारूढप्रश्नः, ताम्बूलप्रश्नः, अष्टमङ्गलप्रश्नः इत्यादिप्रश्नवैविध्यं आधारीकृत्य सामान्यतः विषयाः निरूपिताः। शास्त्रेषु एतदतिरिच्य अनेके प्रश्नविषयाः निरूपिताः चेदपि विशेषतः प्रश्नमार्गः इति ग्रन्थमवलंब्य प्रधानांशान् स्वीकृत्य पत्रमिदं समर्प्यते।





# हरिदासवाङ्मये
# श्रीवेङ्कटाचलाधीशः
## (विजयदासकृतिषु)

तेलुगुमूलम् - सुस्वरं नागराजाचार्युलु
संस्कृतानुवादः - डा.गङ्गिशेट्टि लक्ष्मीनारायणः
चरवाणी - ९४९४२४८३४८



कर्पूर दारति ओप्पिदिंदलि तंदु। तप्पदे बेलगेदु नोडिदे।
रेप्पेय हाकदे मनदणियति। म्मप्पन विग्रह नोडिदे।।

भगवतः श्रीनिवासस्य कर्पूरनीराजनम् अनिमेषनेत्रो भूत्वा अपश्यम्। तेन मनसि परिपूर्णः आनन्दः समागतः।

हिम ऋतु प्रथम मासद दशमि। हिमाकरवाट दिनदल्लि।
क्रम दिंदलि पोंग बिंब मूरुतिय। विमल चरित्र्यवनोडिदे।।

एवंप्रकारेण हेमन्तर्तौ मार्गशिरमासे दशम्यां सोमवासरे भगवतः श्रीनिवासस्य दिव्यमङ्गलविग्रहस्य दर्शनं कृतवान्।

शत अपराधव माडलु कळेदु गतियनीव इंदिरा -
पति विजयविठल पुरंदरन- संगति यल्लि सतत साकिद

अपराधशतं कुर्वन्ति चेदपि आश्रितानां भक्तानां पापानि इन्दिरापतिः विजयविठलः श्रीवेङ्कटेश्वरः, तं देवं पुरंदरदासवर्याणाम् अनुग्रहेण अपश्यम्।

विजयदासवर्याः श्रीवेङ्कटेश्वरस्य नामश्रवणेनैव सर्वं विस्मरन्ति। स्वामिनः श्रीनिवासस्य स्मरणेन समागतेन भक्तिपारवश्येन सुळादिभिः कीर्तनैः श्रीनिवासं स्तुवन् अपारशब्दपुष्पवृष्टिं कुर्वन्ति। भक्तप्रियः वेङ्कटेश्वरः स्वकीयभक्तैः सह क्रीडितवान् इति तस्य इतिहासेन ज्ञायते। पुरंदरदासवर्येभ्यः जलप्रदानम्, पुरंदरदासेन क्रियमाणे अन्नसमाराधने स्वयं घृतस्य परिवेषणम् इत्यादिविषयाः ज्ञाताः एव। यदा विजयदासवर्याः तिरुमलक्षेत्रं प्रति आगतवन्तः तदा भगवतः श्रीनिवासस्य दर्शनं न अभवत्। ब्रह्मोत्सवसमयकारणात् सपदि दर्शनं न अभवत्। अतः ते खेदम् अनुभूय तं भगवन्तं श्रीनिवासं प्रार्थितवन्तः। यथा वत्सः मात्रे गवे आर्तनादम् उच्चैः करोति तथा आर्तनादं कृतवन्तः।

कूगिदरु ध्वनि केलदे गिर। बागिद दयवारदे
भोगि शयन भुवनाधिपते निन्न। आगमनवेन्दिगे अगुवुदु

प्रभो अवनतमुखो भूत्वा भवदर्थं कृतं आर्तनादं न श्रुतवान् वा? मम उपरि दया न आगच्छति वा? हे उरगशयन! भुवनाधिप! कदा तव आगमनं भविष्यति इति वदन्...

भस्तरि गोलिवद नीनुखरे एन्न। अत्तनोड्डुवुदु उचितवे।
चित्तावधान पराकु महाप्रभुवे। एतणरथवनु एति बावीडु।।

भक्तवशः भवान् एवं इतस्ततः पश्यति। एतदुचितं वा? हे महाप्रभो! तव दर्शनेन रक्षस्व!

भगवतः श्रीनिवासस्य दर्शनार्थं समागतेभ्यः विजयदासवर्येभ्यः बहुकालं यावत् दर्शनं न प्राप्तम्। तदा ते अर्थगर्भितत्वेन स्वामिनः क्षेत्रस्य च प्राशस्त्यम् एवं कथितवन्तः।

निन्न दरुशनके बंदवनल्लवो।
पुण्यवंतर दिव्य चरण नोडलु ना बंदे।।

हे स्वामिन्! अहं भवतः दर्शनार्थं न आगतवान्। अत्र पुण्यवतां भवतः भक्ताग्रेसराणां पादानां सन्दर्शनार्थम् आगतवानिति प्रत्यक्षं वदति। दर्शनमित्युक्तौ शास्त्रम्। पुण्यात्मानः इत्युक्तौ अत्र विद्यमानतरुमृगादिरूपदेवताः। तेषां दर्शनार्थम् अहम् आगतवान् इति अर्थगर्भितत्वेन उक्तवन्तः। यदि अतिशयप्रणयासक्ति-उत्साहादियुक्तः पदार्थः न लभ्यते चेद् मनसि उद्वेगः सहजतया आगच्छति। अत्र विजयदासवर्याः भगवतः श्रीनिवासस्य दिव्यमङ्गलविग्रहवस्तुनि प्रणयासक्त्युत्साहाः मनसि पूर्णतया समागताः। अतिशयपरस्परस्नेहभावनया विजयदासवर्यः भवदर्थं न आगतवानिति, भगवन्तं श्रीनिवासम् उद्दिश्य कथयति।

(अनुवर्तते)

# भगवद्गीता

तेलुगुमूलम् - श्री कुप्पा विश्वनाथशास्त्री
संस्कृतानुवादः - बि.गिरीशकुमारः (शोधच्छात्रः)
चरवाणी - ९९८९६५७५७६



तदनु "व्यूढां द्रुपदपुत्रेण" इत्युक्तवान् दुर्योधनः। तत्र द्रुपदपुत्रः धृष्टद्युम्नः। "द्रुपद" इति पदं तु हिंसापरान् वाग्भिः हिंसकस्वभावेन युतम्।

द्रुपदमहाराजः पाण्डवानां श्वशुरः। द्रुपदः द्रोणाचार्यश्च उभौ बाल्ये सहाध्यायिनौ। द्वावपि अत्यन्तस्नेहेन आस्ताम्। तेनैव स्नेहेन द्रुपदः, "अहम् अग्रिमे काले राजा भवितास्मि खलु! त्वं मत्सकाशमागच्छ। अहं त्वां सुखेन द्रक्ष्यामि" इति उक्तवान्। उभावपि हसितवन्तौ। सामान्येनैव विद्याभ्यासः समाप्तः स्वस्वमार्गे गतवन्तौ च।

द्रुपदः महाराजः अभवत्। अन्यत्र द्रोणस्य "कृपी" इति नाम्न्या विवाहः सञ्जातः। तयोः "अश्वत्थामा" इति पुत्रः अजायत। तावत्पर्यन्तं द्रोणाचार्यः अटव्याम् आसीत्। तत्र गावः अपि न लभ्यन्ते स्म। ग्रामीणप्रान्तेषु निवसन्तः गोसदृशाः अरण्येषु वस्तुं न शक्नुवन्ति। तादृशे कीकारण्ये निवसति स्म। अत्यन्तजागरूकतया तपः आचरन्ति ये, तेषां वंशीयाः एते। पुत्रजननान्तरं ये केऽपि तं पुत्रं नीत्वा क्षीरं दत्तवन्तः। तदा बालकेन "क्षीरं आवश्यकम्" इति पृष्टे सति तौ पितरौ जले पिष्टं संस्थाप्य अयमेव श्वेतवर्णयुतद्रवपदार्थः क्षीरं इति दत्तवन्तौ। परन्तु तस्य रुचिम् आस्वाद्य एतत् क्षीरं नास्ति इति क्षीरार्थं रोदित्यपि। तदा अयं द्रोणाचार्यः स्वीयपुत्रे अत्यन्तप्रेम्णा कथमपि मया एका गौः सम्पादनीया इति निश्चितवान्।

गां प्राप्तुं कुत्र गन्तव्यम्? कः प्रष्टव्यः? इति चिन्तयन् सः, मम मित्रं द्रुपदः अस्ति खलु! मां सुखेन दक्ष्यामि इति उक्तवान् किल! तं द्रुपदमहाराजं पृच्छामि चेत् एकां गां मह्यं ददाति। तत्स्वीकृत्य पुत्रं पालयामि इति विचिन्त्य द्रुपदमहाराजं प्रति गतवान्।

द्रुपदश्च बाल्ये एव राज्यं प्राप्तम् इति हेतुना तदैव बहुना अहङ्कारेण युक्तः मत्तः च आसीत्। सुहृदं द्रोणाचार्यं दृष्ट्वाऽपि न सम्भाषितवान्। किञ्च त्वं मम मित्रं कथं भवसि? त्वं कः? एकः दरिद्रः। अहं कः? एकः राजा, आवयोः मैत्री कथं युज्यते? इति ब्रवीति। द्रोणेऽपि कुत्रचित् राजसिकांशः भवत्येव। यद्यपि अरण्यवासिनः तापसिकाः एतादृशैः मानापमानैः खिन्नाः न भवन्ति। तथापि द्रोणे स्थितः प्रतिबद्धः रजोगुणः वह्निकणिकावत् प्रज्वालितः। तेन च "कथमपि त्वत्सदृशराज्यादिसम्पदं प्राप्य त्वया स्नेहं करोमि" इति स्वयं प्रतिज्ञामकरोत् द्रोणाचार्यः।

स्वप्रतिज्ञायाः साफल्याय भीष्मः पाण्डवानां कौरवाणां च गुरुम् अन्विषन्नस्तीति विज्ञातः द्रोणाचार्यः भीष्माचार्यम् आकर्षति। कौरवपाण्डवानां गुरुश्चाभवत्। कुतः एतत् सर्वं इति चेत्, द्रुपदमहाराजं जेतुं शिष्यमेकं विद्याबुद्धीः बोधयित्वा सज्जीकर्तुम्। तत्र च स्वस्य पुत्रात् अश्वत्थाम्नः अपि अग्रगण्यः अर्जुनः इति ज्ञातवान् द्रोणाचार्यः। अर्जुनः इन्द्रस्य अंशेन जन्म प्राप्तवान् इत्यतः सात्त्विकः, अतिविनयवान् च। "अतिविनयः धूर्तलक्षणम्" इति मा चिन्त्यम्। यतः अत्र अतिविनयः नाम परिपूर्णविनयवान् इति। तादृशसद्गुणभरिताय अर्जुनाय स्वीयशस्त्रास्त्राणि सर्वाणि अदात्। तदनु पाण्डवान् कौरवान् च गुरुदक्षिणां अपृच्छत् यत् द्रुपदं महाराजं जित्वा मम पादयोः पातयेत् इति। अयश्च व्यवहारः बहुबृहत्तमः। कौरवाः सर्वेपि गतवन्तः चेदपि अशक्ताः पुनः आगतवन्तः। पाण्डवाश्च गत्वा द्रुपदम् आनीतवन्तः द्रोणवचनमनुसृतवन्तः च। (अनुवर्तते)

# उपकारी चोरः

- कुमारी श्रुति के.बि.
चरवाणी - ९५६२३४२२८९

कस्मिंश्चित् नगरे कश्चन चोरः आसीत्। सः चौर्ये अतीव निपुणः आसीत्।

एकदा चत्वारः पण्डिताः तं नगरम् आगतवन्तः। पण्डितानां सविधे अधिकं धनम् आसीत्। तत् धनम् अपहरणीयम् इति चोरः चिन्तितवान्। अतः सः तेषां स्नेहं सम्पादितवान्। किन्तु पण्डिताः सर्वं धनं दत्वा बहुमूल्यानि रत्नानि क्रीतवन्तः। तानि रत्नानि कोशे स्थापयित्वा ततः प्रस्थितवन्तः।

तदा चोरः चिन्तितवान् - अहम् अपि एतैः सह गच्छामि। मार्गे कुत्रापि एतेषां वधं कृत्वा रत्नानि अपहरिष्यामि इति। अतः सः तान् उक्तवान् - ''भोः पण्डिताः! अहं भवद्भिः विना जीवितुं न शक्नोमि। अतः भवद्भिः सह एव आगच्छामि, कृपया अनुमतिं यच्छन्तु'' इति। पण्डिताः एतत् अङ्गीकृतवन्तः। अनन्तरं सर्वे ततः प्रस्थितवन्तः।

मार्गमध्ये अरण्यम् आसीत्। तत्र किराताः वासं कुर्वन्ति। किरातवसतौ कश्चन काकः आसीत्। सः विचित्रशक्तिमान्। मार्गे ये गच्छन्ति तेषां सविधे धनम् अस्ति चेत् सः जानाति। किरातान् सूचयति च। इदानीं पण्डितान् दृष्ट्वा काकः स्वभाषया किरातान् उक्तवान् - ''रे किराताः! धावन्तु, एतेषां पण्डितानां सविधे धनम् अस्ति। तद् भवन्तः वशीकुर्वन्तु'' इति।

तदा पण्डिताः रत्नरक्षणार्थम् एकम् उपायं चिन्तिवन्तः। ते रत्नानि गीर्णवन्तः। किराताः काकस्य वचनं श्रुत्वा पण्डितान् बद्धवन्तः। तेषां वस्त्राणि निष्कास्य सर्वत्र अन्विष्टवन्तः। परन्तु धनं न लब्धम्। तदा किराताः उक्तवन्तः - ''भोः धनम् अस्त्येव। तत् यच्छन्तु। नो चेत् सर्वेषां वधं कृत्वा चर्म विदार्य प्रत्यङ्गम् अन्वेषणं कुर्मः'' इति।

किरातानां वचनं श्रुत्वा चोरः चिन्तितवान् - यदा एते पण्डितानां वधं कृत्वा शरीरं अन्वेषणं कुर्वन्ति तदा रत्नानि लभ्यन्ते। तदा मम शरीरं अपि रत्नं स्यात् इति ममापि वधं कुर्वन्ति एव। अतः अहं प्रथमं मम वधं कर्तुं वदामि। मम शरीरे तु रत्नं नास्ति। तद् ज्ञात्वा किराताः पण्डितान् मुञ्चन्ति। मम प्राणार्पणेन पण्डितानां रक्षणं भवतु इति।



अनन्तरं सः उक्तवान् - ''भोः किराताः! अस्माकं सविधे धनं किमपि नास्ति। तथापि संशयः अस्ति चेत् मम वधं कृत्वा पश्यन्तु'' इति। किराताः चोरस्य वधं कृतवन्तः। शरीरे सर्वत्र अन्वेषणं कृतवन्तः। परन्तु कुत्रापि धनं न लब्धम्।

तदा ते काकस्य वचनम् एव असत्यं स्यात् इति चिन्तयित्वा क्षमायाचनं कृत्वा तान् पण्डितान् सगौरवं ततः प्रेषितवन्तः।





# तिरुप्पाणि आळ्वार्

तेलुगु मूलम् - श्री डी.श्रीनिवास दीक्षितुलु
चित्राणि - श्री के.तुलसीप्रसादः
संस्कृतानुवादः - डा. एम्. प्रफुल्ला
चरवाणी - ९४४०२८५९८५

1 तिरुप्पाणिःश्रीरङ्गनाथस्य परमभक्तः। अतः उरैय्यूरु स्थलात् श्रीरङ्गक्षेत्रमगच्छत्। कावेरीतटे उपविश्य अनुक्षणं राजगोपुरं पश्यन् परवशः भवति स्म।




3 तिरुप्पाणेः आलयप्रवेशाय अनुमतिः नासीत्। आलयमार्गेऽपि तस्यागमनं निराकृतम्। तम्बुरा नामकं वाद्यं वादयन् श्रीरङ्गनाथं कीर्तयन्नासीत्।




5 तम्बुरां वादयन् कोऽपि यत् किञ्चित् ददाति तमाहारं खादन्, स्वामिनं कीर्तयन्नासीत्। तस्यान्यचिन्ता नासीत्।




7 एकदा तिरुप्पाणिः भक्तिपरवशः अभवत्।










नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम्।।

13 मुनिः मार्गस्य पार्श्वस्थां शिलां गृहीत्वा तिरुप्पाणौ अक्षिपत्। शिलाघातात् मुखात् रक्तं स्रवति स्म। तदा तिरुप्पाणिः उत्थाय....







16 रक्तं दृष्ट्वा मुनिः पश्चात्तापयुतः अभवत्। तद्दिने रात्रौ स्वप्ने श्रीरङ्गनाथः साक्षात्कृत्य मम भक्तं तव भुजस्कन्धयोः आरोप्य मन्दिरम् आनय इत्यवदत्।

17 परेद्युः मुनिः कावेर्यां स्नात्वा तिरुप्पाणिं स्वभुजस्कन्धयोः संस्थाप्य देवालयं प्राविशत्।




20 तिरुप्पाणिं स्कन्धयोः गृहीत्वा मुनिः त्रिवारमालयस्य प्रदक्षिणं कृतवान्। द्वारं उद्घाटितम्। तिरुप्पाणे!....




23 तिरुप्पाणिः आनन्देन आशु अमलवादिप्पिरान् नाम दिव्यप्रबन्धमगायत्।







26 सर्वे भक्ताः मुक्तकण्ठेन उक्तवन्तः।

अग्रिमसंचिकायां श्रीवेङ्कटेशस्य दिव्यलीलाविलासान्तरं दृष्ट्वा धन्याः भवेम...

स्वस्ति

# रसप्रश्नाः

- श्री वि.प्रदीप कुमारः
चरवाणी - ९४९१६४६५३२

१. अष्टाध्यायीं कः लिलेख?
अ. पाणिनिः आ. पतञ्जलिः
इ. वररुचिः ई. दीक्षितः

२. पुराणेषु वचतुष्टये किं नान्तर्भवति?
अ. वराह आ.वामन
इ. वायु ई. वैभव

३. दीपावली करिमन् मासे आचर्यते?
अ. श्रावणे आ.मार्गशीर्षे
इ. कार्तिके ई. आश्वयुजे

४. देवानां गुरुः कः?
अ. इन्द्रः आ.चन्द्रः
इ. रुद्रः ई. बृहस्पतिः

५. दैत्यानां गुरुः कः?
अ. शुक्रः आ. इन्द्रः
इ. रुद्रः ई. बृहस्पतिः

६. देवानां राजा कः?
अ. चन्द्रः आ. रुद्रः
इ. इन्द्रः ई. शुक्रः

७. कंसस्य अनुजा का?
अ. यशोदा आ. रुक्मिणी
इ. देवकी ई. जाम्बवती

८. पितृतर्पणदाने का तिथिः समृद्धा?
अ. पूर्णिमा आ.चतुर्दशी
इ. अमावास्या ई. द्वितीया

समाधानानि - १.अ २.ई ३.ई ४.ई ५.अ ६.इ ७.इ ८.इ

## चित्रलेखनम्

अस्य चित्रपटस्य रञ्जनं कुर्मः वा?



प्रदत्तं चित्रपटम् अधोनिर्दिष्टप्रदेशे स्थापयामो वा?



Printed by Sri P. Ramaraju, M.A., and Published by Dr. K. Radha Ramana, M.A., M.Phil., Phd., on behalf of Tirumala Tirupati Devasthanams and Printed and Publised at Tirumala Tirupati Devasthanams Press, K.T. Road,Tirupati 517 507. Editor : Dr.V.G. Chokkalingam, M.A., Ph.D.



SAPTHAGIRI (SANSKRIT) ILLUSTRATED MONTHLY PUBLISHED BY TIRUMALA TIRUPATI DEVASTHANAMS
PRINTING ON 25-10-2021 & posting at Tirupati RMS Regd.with the Registrar of Newspapers for
India under RNI No.21138/1970 Postal Regd. No. TRP/154/2021-2023"
LICENCED TO POST WITHOUT PREPAYMENT No.PMGK/RNP/WPP-04(4)/2021-2023"
Posting on 5th of every month.

# तिरुमल श्रीस्वामिनः आलये "दीपावलिः"

(०४-११-२०२१)